# प्रातः स्मरणीय श्लोक

## ।। श्री गणपतये नमः ।।

कराग्रे वसते लक्ष्मीः करमध्ये सरस्वती ।
करमूले स्थितो ब्रह्मा प्रभाते करदर्शनम् ।। १ ।।

समुद्रवसने देवि पर्वतस्तनमण्डिते
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ।। २ ।।

## गणेश स्मरण

प्रातः स्मरामि गणनाथमनाथबन्धुं
सिन्दूरपूरपरिशोभितगण्डयुग्मम् ।
उद्दण्डविघ्नपरिखण्डनचण्डदण्ड-
माखण्डलादिसुरनायकवृन्दवन्द्यम् ॥



## विष्णु स्मरण

प्रातः स्मरामि भवभीतिमहार्ति शान्त्यै/नाशं
नारायणं गरुडवाहनमब्जनाभम् ।
ग्राहाभिभूतवरवारणमुक्तिहेतुं
चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥ १ ॥



## शिव स्मरण

प्रातः स्मरामि भवभीतिहरं सुरेशं
गङ्गाधरं वृषभवाहनमम्बिकेशम् ।
खट्वाङ्गशूलवरदाभयहस्तमीशं
संसाररोगहरमौ-षध-मद्वितीयम् ॥ १ ॥



## देवी स्मरण

प्रातः स्मरामि शरदिन्दुकरोज्ज्वलाभां
सद्रत्नवन्मकरकुण्डलहारभूषाम् ।
दिव्यायुधोर्जितसुनीलसहस्रहस्तां
रक्तोत्पलाभचरणां भवतीं परेशाम् ॥ १ ॥



## सूर्यस्मरण

प्रातः स्मरामि खलु तत्सवितुर्वरेण्यं
रूपं हि मण्डलमृचोऽथ तनुर्यजूंषि ।
सामानि यस्य किरणाः प्रभवादिहेतुं
ब्रह्माहरात्मकमलक्ष्यमचिन्त्यरूपम् ॥ १ ॥



## श्रीराम प्रातः स्मरण

प्रातः स्मरामि रघुनाथमुखारविन्दं
मन्दस्मितं मधुरभाषि विशालभालम् ।
कर्णावलम्बिचलकुण्डलशोभिगण्डं
कर्णान्तदीर्घनयनं नयनाभिरामम् ॥ १ ॥



प्रातर्भजामि रघुनाथकरारविन्दं
रक्षोगणाय भयदं वरदं निजेभ्यः ।
यद्राजसंसदि विभज्य महेशचापं
सीताकरग्रहणमङ्गलमाप सद्यः ॥ २ ॥

प्रातर्नमामि रघुनाथपदारविन्दं
वज्राङ्कुशादिशुभरेखि सुखावहं मे ।
योगीन्द्रमानसमधुव्रतसेव्यमानं
शापापहं सपदि गौतमधर्मपत्न्याः ॥ ३ ॥

प्रातः श्रये श्रुतिनुतां रघुनाथमूर्तिं
नीलाम्बुजोत्पलसितेतररत्ननीलाम् ।
आमुक्तमौक्तिकविशेषविभूषणाढ्यां
ध्येयां समस्तमुनिभिर्जनमुक्तिहेतुम् ॥ ४ ॥

प्रातर्वदामि वचसा रघुनाथ नाम
वाग्दोषहारि सकलं शमलं निहन्ति ।
यत्पार्वती स्वपतिना सह भोक्तुकामा
प्रीत्या सहस्रहरिनामसमं जजाप ॥ ५ ॥

## हनुमंत स्मरण



प्रातः स्मरामि हनुमन्त-मनन्त-वीर्यं
श्रीरामचन्द्रचरणाम्बुज-चञ्चरीकम् ।
लङ्कापुरीदहन-नन्दित-देववृन्दं
सर्वार्थसिद्धिसदनं प्रथितप्रभावम् ॥

## त्रिदेवोंके साथ नवग्रहस्मरण

ब्रह्मा मुरारिस्त्रिपुरान्तकारी
भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनिराहुकेतवः
कुर्वन्तु सर्वे मम सुप्रभातम् ॥

## ऋषिस्मरण

भृगुर्वसिष्ठः क्रतुरङ्गिराश्च
मनुः पुलस्त्यः पुलहश्च गौतमः
रैभ्यो मरीचिश्च्यवनश्च दक्षः
कुर्वन्तु सर्वे मम सुप्रभातम् ॥ १॥

सनत्कुमारः सनकः सनन्दनः सनातनोऽप्यासुरिपिङ्गलौ च
सप्त स्वराः सप्त रसातलानि कुर्वन्तु सर्वे मम सुप्रभातम् ॥ २॥

सप्तार्णवाः सप्त कुलाचलाश्च सप्तर्षयो द्वीपवनानि सप्त
भूरादिकृत्वा भुवनानि सप्त कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ३॥

## प्रकृतिस्मरण

पृथ्वी सगन्धा सरसास्तथापः
स्पर्शी च वायुर्ज्वलितं च तेजः ।
नभः सशब्दं महता सहैव
कुर्वन्तु सर्वे मम सुप्रभातम् ॥

# श्री सुरभि स्मरण

॥ श्री सुरभ्यै नम: ॥



नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥ १ ॥

त्वं माता सर्व देवानां त्वं च यज्ञस्य कारणम् ।
त्वं तीर्थ सर्वतीर्थानां नमस्तेऽस्तु सदानघे ॥ २ ॥

यया सर्वमिदं व्याप्तं जगत् स्थावरजंगमम्
तां धेनुं शिरसा वन्दे भूतभव्यस्य मातरम् ॥ ३ ॥

गावो ममाग्रत: सन्तु, गावो मे सन्तु पृष्ठत:
गावो मे हृदये नित्यं, गवां मध्ये वसाम्यहम् ॥ ४ ॥

गावो मामुपतिष्ठन्तु हेमश्रृङ्ग्यः पयोमुचः
सुरभ्यः सौरभेय्यश्च सरितः सागरं यथा ॥ ५ ॥

गा वै पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा
गावोऽस्माकं वयं तासां यतो गावस्ततो वयम् ॥ ६ ॥

नमो देव्यै महादेव्यै सुरभ्यै च नमो नम:
गवां बीजस्वरूपायै नमस्ते जगदम्बिके
नमो राधाप्रियायै च पद्मांशायै नमो नम:
नम: कृष्णाप्रियायै च गवां मात्रे नमो नम:
कल्पवृक्षस्वरूपायै प्रदात्र्यै सर्वसंपदाम्
श्रीदायै धनदायै च बुद्धिदायै नमो नम:
शुभदायै प्रसन्नायै गोप्रदायै नमो नमः
यशोदायै सौख्यदायै धर्मज्ञायै नमो नमः ॥ ७ ॥

